सकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनाऽसौ लोको न सम्पूर्यते तस्मात् जुगुप्सेत ॥ ३ ॥

सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयं, तद्धैके आहुः–असदेवेदमग्र आसीदेकमेवाऽद्वितीयं, तस्मादसतः सज्जायते, तदैक्षत बहु स्यां प्रजायेयेति तद् अक्षरं ब्रह्म अदृश्यत, तद्पुरुषं, स प्रकृति महत्तत्त्वं प्रत्युन्मुखी करोतीति, तत ईशलोका जीवलोकाश्चेदं सर्वम् अजायत, तदनुप्रविश्य नामरूपे व्याकरोदिति, तस्मात् सन्मूला. सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, यत् सत्प्रतिष्ठं तस्य त्वमसीति ॥ ४ ॥

एष ह्यात्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः, स एषः सत्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते एतदमृतम् अभयम् एतद्ब्रह्म, तद्यथा हिरण्यनिधिं निहितं क्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः, ते सर्वे पाप्मानो यतो निवर्तन्ते अपहतपाप्मा ह्येषो ब्रह्मलोकः ॥ ५ ॥

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणाऽनुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति, न ह वै सशरीरस्य सतः प्रियाऽप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाऽप्रिये स्पृशतः, ततोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते, स तत्र पर्येति जक्षन् क्रीडन् रममाणो यद्यदेवेच्छति तद्भवति तथा रमते ब्रह्मलोके न पुनरावर्तते न पुनरावर्तते ॥ ६ ॥

नैवेह किञ्चनाऽग्र आसीत् मृत्युनैवेदमावृतमासीत्, अशनाया हि मृत्युरिति, सोऽकामयत द्वितीयो म आत्मा जायेतेति, आत्मैवेदमग्र आसीत् पुरुषविध सोऽनुवीक्ष्य नाऽन्यदात्मनोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहं नामाऽभवत् । स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् तदा सर्वमिदमकरोत्, तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियते असौ नामाऽयम् इदं रूपमिति, तथा जायते ॥ ७ ॥

ब्रह्म वा इदमग्र आसीत् तत् आत्मानमेव अवेत्–अहं ब्रह्मास्मीति, तस्मात् तत् सर्वम् अभवत्, तर्हि य एवं वेद–अहं ब्रह्मास्मीति स इदं सर्वं भवति, इदं सर्वं यदयमात्मा, अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽह-

मस्मीति न स वेद, सोऽयमात्मा द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। तस्यैव निःश्वसितमेतद्यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीति। स एव सर्वेषाम् एकायनम् ॥ ८ ॥

इति श्रीगुणातीतब्रह्मोपनिषदि चतुर्थाध्याये तृतीयः पादः।

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यस्य वा सर्वमात्मैवाऽभूत् तत् केन कं पश्येदिति, सोऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वमिति, सोऽयमात्मा सर्वेषां भूतानाम् अधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाऽराः सर्वे समर्पिता एवमेवाऽस्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणा. सर्व एते आत्मानः समर्पिताः ॥१॥

अयमात्मा ब्रह्म सर्वानुभूः, यत्साक्षादपरोक्षाद् ब्रह्म, य आत्मा सर्वान्तरः, तदन्विता जीवलोका ईश्वरलोके ओताश्च प्रोताश्च, ईश्वरलोका ब्रह्मलोकेष्वोताश्च प्रोताश्चेति ते पुरुषोत्तमेन ओताश्च प्रोताश्चेति, यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः, तद्वै यस्याऽऽपः शरीरं तेजः शरीरम् अन्तरीक्षः शरीरं वायुः शरीरम् आदित्य. शरीरं सर्वाणि भूतानि शरीरं स आत्माऽन्तर्याम्यमृत. ॥ २ ॥

विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विद, नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति, सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति। ये ते यावन्तो जीवेशमुक्तानामानन्दाः स एको ब्रह्मलोक आनन्दः परम आनन्दः, एष ब्रह्मलोकः सम्राडिति ॥ ३ ॥

यो ह्यवाप्तकामः परब्रह्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माऽप्येति, यदा हृदि श्रिताः कामाः प्रमुच्यन्ते अथ मर्त्योऽमृतो भवति अत्रैव ब्रह्म समश्नुते, मनसैवाऽनुद्रष्टव्यं नेह नानाऽस्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, इदं सर्वं यदयमात्मा ॥ ४ ॥

यथा सौम्यैकेन मृत्पिण्डेन मृण्मयं सर्वं विज्ञातं स्याद् वाचाऽऽरम्भणं

[illegible] भवत्यमतं [illegible] ज्ञातं विज्ञातं [illegible] ॥

प्रज्ञानं ब्रह्म, अहं ब्रह्माऽस्मि, तत्त्वमसि [illegible], एष त आत्माऽन्तर्याम्यमृतः [illegible] स यश्चाऽयं पुरुषे यश्चासावादित्ये स एकः [illegible] प्रतिष्ठा प्रज्ञानं ब्रह्म, वि[illegible]नमानन्दं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म, स एवमेव पुरुषो ब्रह्म, सर्वं खल्विदं ब्रह्म, एकमेवाद्वितीयम् ॥ ६ ॥

एवं यो ब्रह्म वेत्ति स आत्मानं ब्रह्म वेत्ति, व्यापके बृहत्यां वद्दर्ग-स्याऽलेपो यथा, तद्वदात्मानम् अलेपं विजानाति, साकारे ब्रह्मणि परात्मनः सेवकत्वं यथा, तद्वदात्मानं सेवकं विजानाति, विभाव्य चैवं परब्रह्माधि-गच्छति ॥ ७ ॥

सोऽयं ब्रह्मविद् ब्रह्मेव भवति, सह ब्रह्मणा सर्वान कामान् समश्नुते, परे ब्रह्मणि सर्वान् सदर्थान् सुविन्दते, सर्वार्थसमृद्धो भवति, परब्रह्मसमृद्धो भवति, नाऽन[illegible] नाऽनवाप्तं [illegible]



इति श्रीगुणातीतब्रह्मोपनिषदि चतुर्थाध्याये चतुर्थः पादः ।

समाप्तेयमुपनिषत् ॥

